सामान्याभिधानगुणसाम्यमपि यदा विलीयते अपन्हवं भजति तदेवासौ निष्प्रतियोगिकनिष्कलात्मकोभूत्वा विदेहमुक्तो विद्यते निर्विशेषब्रह्मात्मनाऽवशिष्यत इत्यर्थः ॥ ३६ ॥ देहत्रयापन्हवसिद्धे परमपावने विमले पदे विरूपचित्तनाशाभिधाने सत्वरूपगुणसाम्यापन्हवसिद्धे तस्मिन्विदेहमुक्तिविषये विदेहमुक्तिस्वरूपे तत्रसत्वादिगुणा न सन्ति नाप्यगुणागुणसाम्यवृत्तयोनिर्विकल्पकरूपा भवन्ति नापि मुमुक्षवाश्रयणीयाश्रीर्विद्या भवति तैरनाश्रयणीया श्रीरविद्यापि न विद्यते नहि सापेक्षैकताप्यस्ति किंबहुना इदमस्ति नास्तीत्यादिविकल्पजातं नकिंचिदपीह विद्यते विदेहमुक्तस्य निष्प्रतियोगिकस्वमात्रत्वादित्यर्थः ॥ ४० ॥ ब्रह्मातिरिक्तं नकिञ्चिदस्तीति श्रुत्यर्थसंस्कृतब्रह्मवित्तमोब्रह्मविद्वरीयान् स्वकर्तव्यार्थाभावात्कृतार्थः, स्वदेहाभिमानाभावात् सदाजीवन्नेव मुक्तो भवति किमुवक्तव्यम् स्वयं ब्रह्मैव सन् देहाद्युपाधिरस्तिनास्तीति विभ्रमनाशात्तदपन्हवात् निर्द्वयं ब्रह्माप्येतीति ब्रह्मैव भवेदित्यर्थः ॥ ४२ ॥

शास्त्रेण नश्येत्परमार्थदृष्टिः कार्यक्षमं नश्यति चापरोक्षात् ॥ ४३ ॥ प्रारब्धनाशात्प्रतिभाननाश एवं विधा नश्यति चात्ममाया ॥ ४४ ॥ अहिनिर्ल्वयिनीसर्पनिर्मुक्तोजीववर्जितः ॥ ४५ ॥ वल्मीके पतितस्तिष्ठेत्तं सर्पोनाभिमन्यते ॥ ४६ ॥ एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते ॥ ४७ ॥ प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥ ४८ ॥ नेतिनेतीति रूपत्वादशरीरोभवत्ययम् ॥ ४९ ॥ विश्वश्च तैजसश्चैव प्राज्ञश्चेति चते त्रयः ॥ ५० ॥ विराड्हिरण्यगर्भश्च ईश्वरश्चेति तेत्रयः ॥ ५१ ॥ ब्रह्माण्डं चैव पिण्डाण्डं लोका भूरादयः क्रमात् ॥ ५२ ॥ स्वस्वोपाधिलयादेव लीयन्ते प्रत्यगात्मनि ॥ ५३ ॥

